# Ram Charitra Manjari - Sanskrit

श्रीमान् विष्णुः प्रजातो दशरथनृपते रामनाथोऽथ नीतो

विश्वामित्रेण मन्त्राह्वदनुजसहितस्ताटकघातुकोऽस्त्रम् ।

ब्राह्मादयं प्राप्य हत्वा निशिचरनिकरं यज्ञपालो विमोच्या-

हल्यां शापाच्च भङ्क्त्वा शिवधनुरुपयन् जानकीं नः प्रसीदेत् ॥ १॥

आयन् रामः सभार्योध्वनि निजसहजैर्भार्गवेष्वासरोषा-

द्धत्वा सुरारिं पुरग उत नुतस्तापसैर्भूपपृष्ठैः ।

कल्याणानन्तधर्मोऽगुणलवरहितः प्राणिनामन्तरात्मे-

त्यादयुक्तश्चाभिषेके पुरजनमहितो महयतां मे वचोभिः ॥ २॥

कैकेयीप्रीतिहेतोः स सहजनृपजोवल्कली यानरण्यं

गङ्गातारी गुहार्च्यः कृतरुचिरजटो गीष्पतेः पुत्रमान्यः ।

तीर्त्वा कृष्णां प्रयातोऽवतु निजममलं चित्रकूटं प्रपन्नं

स्वाम्बाभिर्भ्रातरं तं श्रुतजनकगतिः सान्त्वयन् न्युप्ततीर्थः ॥ ३॥

दत्वाऽस्मै पादुके स्वे क्षितिभरणकृतौ प्रेष्य तं काकनेत्रं

व्यस्याराज्योऽत्रिनाम्नो वनमथ समितो दण्डकं तापसेष्टम् ।

कुर्वन् हत्वा विराधं खलकुलदमनं याचितस्तपसाग्र्यै-

स्तेषां दत्त्वाऽभयं स्वानसिधनुरिषुधीन् यानगस्त्त्यात् स पायात् ॥ ४॥

आसीनः पञ्चवट्यामकुरुत विकृतां राक्षसीं यो द्विसप्त-
क्रव्यादानप्यनेकानथ खरमवधीद् दूषणं च त्रिशीर्षम् ।
मारीचं मार्गरूपं दशवदनहृतामाकृतिं भूमिजां यां
अन्विष्यन्नार्तगृध्रं स्वगतिमथ नयन् मामवेत् घ्नन् कबन्धम् ॥ ५॥

पम्पातीरं स गच्छन्निह कृतवसतिर्भक्तितुष्टः शबर्यै
दत्वा मुक्तिं प्रकुर्वन् हनुमत उदितं प्राप्तसुग्रीवसख्यः ।
सप्त च्छित्वा सालान् विधिवरबलिनो वालिभित्सूर्यसूनुं
कुर्वाणो राज्यपालं समवतु निवसन् माल्यवत्कन्दरेसौ ॥ ६॥

नीत्वा मासान् कपीशानिह दश हरितः प्रेष्य सीतां विचित्या-
यातश्रीमद्धनूमद्गिरमथ समनुश्रुत्य गच्छन् कपीन्द्रैः ।
सुग्रीवाद्यैरसङ्ख्यैर्दशमुखसहजं मानयन्नब्धिवाचा
दैत्यघ्नः सेतुकारी रिपुपुररुदवेद्वानैर्वैरिघाती ॥ ७॥

भग्नं कृत्वा दशास्यं गुरुतरवपुषं कुम्भकर्णं निहत्य
प्रध्वस्ताशेषनागं पदकमलनतं तार्क्ष्यमानन्द्य रामः ।
सर्वानुज्जीवयन्तं गिरिधरमनघश्चाञ्जनेयं कपीन् स्वान्
विज्ञानास्त्रेण रक्षन् समवतु दमयंल्लक्ष्मणाच्छक्रशत्रुम् ॥ ८॥

क्रव्यादान् घ्नन्न्सङ्ख्यानपि दशवदनं ब्रह्मपूर्वैः सुरेशैः
पुष्पैराकीर्यमाणो हुतवहविमलमाप्य सीतां विधाय ।
रक्षोनाथं स्वभक्तं स्वपुरमथ गतः पुष्पकस्थः समस्तैः
साम्रज्ये चाभिषिक्तो निजजनमखिलं मानयन् मे गतिः स्यात् ॥ ९॥

रक्षन् क्षोणीं समृद्धां नुत उत मुनिभिर्मानयन् वायुसूनुं
प्रेष्यादित्यात्मजादीन् व्यतनुत भरतं यौवराज्येऽनुमान्य ।
कार्ये सौमित्रिमार्तश्वगदितकृदरिघ्नोऽथ शत्रुघ्नो यो
हत्वाऽसौ दुष्टशूद्रं द्विजसुतगुबवेत् कुम्भजान्मालभारी ॥ १०॥

यज्ञं तन्वन् त्रिकोटीर्व्यतुदत भरताद्यैः सुरानीशवाक्या-
द्यास्यन् धामात्रिपुरं भुजिमथ स नयन्नात्मसून् स्वराज्ये ।
कृत्वा श्रीह्रीहनूमद् धृतविमलचलच्चामरच्छत्रशोभी
ब्रह्माद्यैः स्तूयमानो निजपुरविलसत्पादपद्मोऽवतान्माम् ॥ ११॥

इति श्रीरामचरित्रमञ्जरी लेशतः कृता ।
राघ्वेन्द्रेण यतिना भूयाद्रामप्रसाददा ॥ १२॥

॥ इति श्रीमत्सुधीन्द्रकरकमलसञ्जात राघवेन्द्रयतिकृता
श्रीरामचारित्रमञ्जरी सम्पूर्णा ॥